सा तु दृष्ट्वा प्रियं तं च मालिनी पृष्ठतोऽन्वगात् ।
सुचारोर्दुहिता साध्वी वने राजीवलोचना ॥ $128^{7}$ ॥
पथि सा सुषुवे बाला सुकुमारं कुमारकम् ।
तमपास्याथ तत्रैव राजानं सान्वगच्छत ॥ $128^{8}$ ॥
पतिव्रता महाभागा द्रौपदीव पुरा सती ।
कुमारः सुकुमारोऽसौ गिरिपृष्ठे रुरोद ह ॥ $128^{9}$ ॥
दयार्थं तस्य मेघास्तु प्रादुरासन्महात्मनः ।
श्रविष्ठायास्तु पुत्रौ द्वौ पैप्पलादिश्च कौशिकः ॥ $128^{10}$ ॥
दृष्ट्वा कृपान्वितौ गृह्य तौ प्राक्षालयतां जले ।
निघृष्टौ तस्य पार्श्वौ तु शिलायां रुधिरप्लुतौ ॥ $128^{11}$ ॥
अजश्यामः स पार्श्वाभ्यां घृष्टाभ्यां सुसमाहितः ।
अजश्यामौ तु तत्पार्श्वौ देवेन संबभूवतुः ॥ $128^{12}$ ॥
अथा[1]जपार्श्व इति वै चक्राते नाम तस्य तौ[2]) ।
स तु रे[3] मकशालायां द्विजाभ्यामभि[4]वर्धितः ॥ $128^{13}$ ॥
रे[1]मकस्य तु भार्या तमुद्वहत्(!)पुत्रकारणात् ।
रे[1]मक्याः[2]) स तु पुत्रोऽभूद्, ब्राह्मणौ सचिवौ तु[3]) तौ ॥ $128^{14}$ ॥
तेषां पुत्राश्च पौत्राश्च युगपत्तुल्यजीविनः ।
स एष पौरवो वंशः पाण्डवानां महात्मनाम्[1]) ॥ $128^{15}$ ॥
श्लोकोऽपि चात्र गीतोऽयं नाहुषेण ययातिना ।
जरासंक्रमणे पूर्वं तदा[1]) प्रीतेन धीमता ॥ $128^{16}$ ॥
अचन्द्रार्कग्रहा भूमिर्भवेदियमसंशयम्[1]) ।
अ-पौरवा मही नैव[2]) भविष्यति कदाचन ॥ $128^{17}$ ॥

---

एष वः[1]) पौरवो वंशो विख्यातः कथितो मया[2]) ॥ $128^{18}$ ॥

---

$128_{7}$ = Br. 13.130
$128_{8}$ = Br. 13.131
$128_{9}$ = Br. 13.132
$128_{10}$ = Br. 13.133.
$128_{11}$ = Br. 13.134.
$128_{12}$ = Br. 13.135.
$128_{13}$ = Br. 13.136, 121 (). 1) Br. 13.121 () तत्र– । 2) Br. 13.121 () तस्य नाम तत् । 3) Br. 13.121 () वे 4) Br. 13.121 () –जनां परि– ।
$128_{14}$ = Br. 13.237, 121 (). 1) Br. 13.121 () वे 2) Br. 13.137 त्याः । 3) Br. 13.121 ()च
$128_{15}$ = Br. 13.138, 121 () प्रतिष्ठितः ।
$128_{16}$ = Br. 13.139, 121 (). 1) Br. 13.121 () भृशं ।
$128_{17}$ = Br. 13.140, 121 (). 1) Br. 13.121 () अत्र न संशयः । 2) Br. 13.121 () न तु मही ।

---

$128_{18}$ = Br. 13.141[a], 121 (); H. 1829[a]. 1) H. ते 2) H. यत्र जातोऽसि पार्थिव ।

# नामानुक्रमणिका

( नागरी अङ्क पुस्तक की पृष्ठ संख्या और अंग्रेजी अङ्क श्लोक संख्या तथा पाठान्तर के हैं। )

## ल



## व

